विलिङ्ग्ध्यम्

प्रणम्य भारतीं देवीं सर्वलोकैकमातरम्

नारायणं प्रवक्ष्यामि विलिङ्ग्ध्यानि पदान्यहम् २३

एकारैकारवर्णौ यौ संहितायां विकारिणौ

तदन्तानि विलिङ्ग्ध्यान्युच्यन्ते वेदवित्तमैः २४

पुरातनेऽतिरिक्तं यत्त्यक्त्वानुक्तं समोप्य च

ऋक्तन्त्रेण तु गृह्यन्ते सव्याख्येनैव तान्यपि २५

निमित्तत्वेन यद्ग्राह्यं गृह्यते पदमेव तत्

अपि चेत् स्याद्धि नान्यस्तु पूरणेऽत्र विधीयते २६

अग्ने पक्व वर्धसे कण्वे इदं ते ऊ ते दिवेदिवे

एते शरणे महाधने शृण्वे कर मिमे वर्ण सधमादे अयं ते प्रथमः
२७

त्विषे ते अर्णवदुहते सोमे सिञ्चे के युग्म हर्यते इष्टये

देवतातये दृष्टि हवामहे शचीपते पीतये युयोजते मदे चिकित्रे

बाहु वरन्त सोमपीतये रिरिक्षे द्वितीयः २८

कामे भरणी मे शूलं यजामहे मध्ये नयन वावृते त्रिते स्तुषे

गोपते पवसे ऋञ्जसे सुम्ने तृतीयः २९

स्कृण्वे बृहते वतये प्रिये ईयमाने चतुर्थः ३०

जरित्रे कोशे वृधे दधसे रथे सुदानवे योग नयनं वाजसातये

द्युम्ने चक्षसे ईडते देववीतये पवते पञ्चमः ३१

विश्वचर्षणे स्थूणे हूयते श्रीणीषे पते श्रोत्रं घृष्वये सूरे युग्मकं करामहे योजते हरसे इद्धे ये युग्ममव्ये ववक्षेत्येधत्ते कृपे दमे मूर्ति ब्रुवते प्रस्नापयन्ते यज्ञे षष्ठः ३२
कलशे पिप्ये पुनते वृष्णे दृशे ववृषे वने जज्ञे उपाके वोचे येमिरे ऊतये स्वर मध्यंदिने विदे सप्तमः ३३
एकारविलिङ्घ्यं समाप्तम्

वन्दध्यै वैतसै मकरं तरध्यै हन्तवै सनतै सर्तवै विश्वा अम्नवै अश्नवै तस्मै अस्मै नेत्रस्तवेऽष्टमः ३४
ऐकारं समाप्तम्

अथो विलिङ्घ्यसूत्रस्य संख्याय कलिसंज्ञिका
एकादिपञ्चपर्यन्तमुदाहरणमाह हि ३५
पञ्चदशस्यैकं तु चतुर्विंशतिरेव च
एकस्य चैकरीत्या च धमसंख्या तथेरिता ३६
एकस्य द्वितयत्वेन राशिसंख्या तथेरिता
एकस्य चैव सूत्रस्य द्वितयत्वेन निश्चितम् ३७
वाणसंख्याकसूत्राणामेकमेवं प्रकीर्तितम्
आहत्योदाहृतिः प्रोक्ता संख्याय कलिसंज्ञिका ३८
एकमेषां विना संख्या विलिङ्घ्ये भौतिकं विदुः
ऐकारस्य च सूत्राणि दशसंख्या समीरिता ३९

एकस्य चैकरीत्या च वसुसंख्यास्तथेरिताः
एकस्य द्वितयत्वेन करसंख्या तथेरिता
आहत्योदाहृतिः प्रोक्ता राशिसंख्यासमेन तु ४०
विलिङ्घ्यं समाप्तम्